the Adhi-dvipa (world of human habitations) are at the most three koshas in length while the length of wasp etc outside the human island, is at the most, one yojane or 4 koshas.

It is also mentioned in Jama Canonical Works that a dvi-indriya (two sensed) living being named अलस Alasa has a length of twelve govyutas. If the army of a Cakravatin happens to encamp on the ground inhalited by that creature, and if that animal dies on account of the heavy burden of the Cakravartin's army, then, it creates such an enormous hollow in the ground, that the whole army of the Cakravartin is tumbled down into it and dies.

### (c) The Height of Nāraka Jivas

अथ पञ्चेन्द्रियेषु पूर्वं नारकाणां शरीरप्रमाणं विभणिषुराह—

धणुसयपंचपमाणा नेरइया सत्तमाइ पुढवीए ।
तत्तो अद्धद्धूणा नेया रयणप्पहा जाव ॥ २९ ॥

29 Dhaṇusaya-pañcapamāṇā Néraiyā sattamāi puḍhavié ।
Tatto addhaddhūṇā néyā Rayaṇappahā jāva 29

[ पञ्चशतधनुः प्रमाणा नैरयिका सप्तम्यां पृथिव्याम् ।
ततोऽर्द्धार्द्धोना ज्ञेया रत्नप्रभां यावत् ॥ २९ ॥

Pañcaśatadhanuḥ pramāṇā Nairayikā saptamyām prithivyām ।
Tato arddhārddhonā jnéyā Ratnaprabhām yāvat 29 ]

*Trans.* 29 The Nārakas (denizens) dwelling in the Seventh hell (possess a body) 500 dhanuṣas in height; from there (the bodies of the denizens of hell in the other hells) upto Ratnaprabhā hell must be understood to diminish in half the measure (in the respective order). 29.

व्याख्या-२९ धनुःशतपञ्चप्रमाणशरीरा नारकाः तमस्तमः प्रभायां सप्तमनरकपृथिव्यां ज्ञेयाः । ततो व्युत्क्रमेण अर्धार्धोन ॥ देहप्रमाणा नारका रत्नप्रभां यावत्ज्ञेया । तद्यथा–तमस्तमः प्रभायां पञ्चधनुःशतानि देहप्रमाणं ७।

तमःप्रभायां सार्धद्वे धनुः शते देहप्रमाणं ६। धूमायां पञ्चविंशशतं धनुषां देहप्रमाणं ५। पङ्कायां द्वाषष्टिर्धनूंषि द्वौ हस्तौ देहप्रमाणं ४। वालुकायाम् एकत्रिंशद्धनूंषि एकोहस्तो देहप्रमाणं ३। शर्करायां पञ्चदशधनूंषि द्वौ हस्तौ द्वादशाङ्गुलानि देहप्रमाणं २। रत्नप्रभायां सप्त धनूंषि त्रयो हस्ताः षडङ्गुलानि देहप्रमाणं १॥

इह हि शरीरप्रमाणमुत्सेङ्गुलि (ल) निष्पन्नं, यच्च धनुषश्चतुर्हस्त-प्रमाणं निष्पन्नं, तेषां नारकाणां शरीरप्रमाणं प्रतिपृथिवि विज्ञेयं। एतत्स्वाभाविकं शरीरप्रमाणम्। उत्तरवैक्रियं तु स्वाभाविकशरीरप्रमाणात्सप्तस्वपि पृथिवीषु द्विगुणं ज्ञेयम्।

अथ जघन्यतस्तु सप्तस्वपि पृथिवीषु द्विविधोऽपि स्वाभाविकउत्तर वैक्रियश्च क्रमादङ्गुलस्य असङ्ख्यातांशःसङ्ख्यातांशश्च इयं द्विधाऽप्यवगाहना उत्पत्तिसमये नान्यदा। केचित्तु जघन्यमुत्तरवैक्रियमप्यङ्गुलासङ्ख्यातभाग प्रमाणममाहुः।

यदागमः–[1]'जहण्णं भवधारणिज्जा अंगुलस्स असंखेज्जइभागं उत्तर–वेउव्विया वि अंगुलस्स असंखेज्जइभागं'' इति। इह ग्रन्थकृता जघन्याऽवगाहना नोक्ता तथापि प्रस्तावादुक्ता। तथा प्रतिप्रस्तटं जघन्यमध्यमोत्कृष्टदेहप्रमाण-विशेषो ग्रन्थगौरवभयान्नोच्यते, तच्चान्यशास्त्रेभ्योऽवसेयमितिगाथार्थः॥२९॥

*D. C.* Here the ordinary measure of the body is given, which can be summarised as under:—

१ जघन्येन भवधारणीयमङ्गुलस्य असङ्ख्येयभागः, उत्तरवैक्रियमप्यङ्गुलस्य असङ्ख्येयभागः।

**Table**

| No. | Name of the Hell-earths. | Measure of Height of Bodies of denizens. | | |
|---|---|---|---|---|
| | | Dhanuṣa | Hastas | Fingers |
| 7 | Tamastamaḥ-prabhā | 500 | | |
| 6 | Tamaḥ prabhā | 250 | | |
| 5 | Dhūma prabhā | 125 | | |
| 4 | Paṅka-prabhā | 62 | 2 | |
| 3 | Vālukā-prabhā | 31 | 1 | |
| 2 | Śarkarā-prabhā | 15 | 2 | 12 |
| | Ratna-prabhā | 7 | 3 | 6 |

The following table will clarify the above measures:—

24 Fingers=1 Hasta

4 Hastas=1 Dhanus

The uttara-vaikriya (changed or extra-ordinary) body has double the measure of the natural ordinary body in each hell-earth Both these avagāhanās (sizes) of the body viz-the natural and the changed--take place only at the time of birth and after birth The distinct measure of the lowest, ordinary, and the highest bodies in accordance with the various layers of the hell-earths is not mentioned here for fear of an unnecessary increase in the bulk of the volume It can, however, be easily known from other Scriptural works.

(d) **Height of Tiryañca and Manuṣyas**
**Height of Garbhaja Tiryañcas.**

**अथ प्रस्तावान्नारकाणां शरीरप्रमाणमुक्त्वा पञ्चानामपि गर्भज संमूर्छिम-पञ्चेन्द्रियतिरश्चां शरीरप्रमाणमाह--**

जोयणसहस्समाणा, मच्छा उरगा य गब्भया हुंति ।
धणुहपुहुत्तं पक्खी, भुयचारी गाउयपुहुत्त ॥ ३० ॥

30 Joyaṇasahassamāṇā macchā uragā ya gabhayā hunti
Dhaṇu-puhuttam pakhkhî, bhuyacarî gāuya-puhuttam 30

[ योजनसहस्रमाना मत्स्या उरगाश्च गर्भजा भवन्ति ।
धनुः पृथक्त्वं पक्षिषु भुजपरिसर्पाणां गव्यूत-पृथक्त्वम् ॥ ३० ॥

Yojana sahasramānā matsyā uragāsca garbhajā bhavanti
Dhanuḥ prithaktvam pakṣiṣu bhujaparisarpāṇām gavyûta prithaktvam 30 ]

Trans. 30 (The bodies of) the fishes and the embryo-originating creeping creatures are a thousand yojanas in magnitude There is the severalty of dhalnuses in the case of the birds and the sevaralty of kośas in the case of the arm-moving creatures. 30.

व्याख्या-३०-योजनसहस्रप्रमाणशरीरा मत्स्या उरगाश्च गर्भजा भवन्ति । तत्र योजनसहस्रमानं स्वयंभूरमणमत्स्यानामवसेयं । तथौघतः उरगाणां गर्भजानां बहिर्द्वीपवर्तिनामुत्कृष्टतो देहप्रमाणमवसेयमिति । मत्स्यशब्देन जलचरा ग्राह्याः । चकारात्संमूर्छिमा अपि मत्स्यास्तत्प्रमाणशरीरा भवन्ति । तथा पक्षिणो गर्भजा धनुः पृथक्त्वं पृथक्त्वसंज्ञा पूर्वोक्तैवात्र ज्ञेया । प्राकृतत्वाद्वचनव्यत्ययः तथा भुजचारिणो गृहगोधादयो गव्यूतपृथक्त्वशरीरप्रमाणेन भवन्तीति गाथाक्षरार्थः ॥ ३० ॥

*D. C.* A thosand yojanas is the measure of the bodies of the fishes and the creeping beings. Fishes of such a vast size can be had in the Svayambhû-ramaṇa ocean. The creeping creatures of such a great magnitude must be understood to be outside the Human Island. The word 'fishes' has the general sense of including all the aquatic animals The use of the 'word,

ca (and), suggests the same measure also, for the Sammûrcchima aquatics.

The embryo-born birds hsve the prithaktva ( severalty ) of dhanuses. The use of the term prithaktva ( severalty ) has already been explained [ prithaktva=2-9 times the measure e-g yojana prithaktva=2 to 9 yojanas. ]

In the same way, the arm-moving creatures have bodies possessing Gavyûta-prithaktva or measuring 2 to 9 Koshas,

**Height of Sammûrcchima Tiryanca Pancendriya Jivās**

**अथ गर्भजतिरश्चां चतुष्पदवर्जानां विशेष उक्तः अथान्येषां संमूर्छिम-तिरश्चां संमूर्छिमचतुष्पदानां च देहमानविशेषं विवेक्षुराह—**

**खयरा धणुहपुहुत्तं, भुयगा उरगाय जोयणपुहुत्तं ।**
**गाउयपुहुत्तमित्ता समुच्छिमा चउप्पया भणिया ॥ ३१ ॥**

31 Khayarā dhaṇuḥ-puhuttam bhuyagā uragā ya joyaṇa-puhuttam ।
Gāuya puhutta mittā samucchimā cauppayā bhaniyā 31.

**[ खचराणां धनुः पृथक्त्वं भुजगानामुरगानां च योजनपृथक्त्वम् ।**
**गव्यूतपृथक्त्वमात्राः संमूर्च्छिमाश्चतुष्पदा भणिताः ॥ ३१ ॥**

Khacaraṇām dhanuiḥ 'prithaktvam bhujagānam-uragānām ca yojanaprithaktvam ।
Gavyuta prithaktva-mātrā sammūrcchimā ścatuṣpadā bhanitāḥ 31 ]

*Trans.* 31. The birds are 2 to 9 dhanuses in length; the creeping and arm-moving, are 2 to 9 yojanas long, and the Sammûrcchima quadrupeds are declared to be 2 to 9 koshas in magnitude. 31

**व्याख्या -३१—खचराः पक्षिणो गृध्रादयो धनुः पृथक्त्वं शरीरेण भवन्ति। उरगा भुजगाश्च संमूर्छिमा योजनपृथक्त्वं देहप्रमाणेन भवन्ति। संमूर्छिमचतुष्पदा अपि गव्यूतपृथक्त्वमात्रं। मात्राशब्दोऽत्र प्रमाणवाची। तत्प्रमाणशरीरा इत्यर्थः। क्वापि भुजपरिसर्पाणां धनुः पृथक्त्वमप्युक्तं। तथाहि–[1]समुच्छिम चउपयभुयगुरगा (ग) गाऊअ धणुजोयणपुहुत्तमिति वचनात्॥ इति गाथाक्षरार्थः॥ ३१ ॥**

[1] समूर्छिमचतुष्पदभुजपरिसर्पो(:परिसर्पाणां गव्यूत धनुर्योजनपृथक्त्वम् ।

*D C*..The sky-flying i-e the birds like the vultures etc possess a body 2 to 9 dhanuṣas long. The brest-going and the arm-going beings said here to possess 2 to 9 yojanas long bodies, are Sammūrcchima. The Sammūrcchima quadrupeds also, are 2 to 9 gavyutas in length.

It may be noted here that the term 'mātrā' is used here in the sense of measurement.

Some attribute prithaktva (severally) 2-9 of dhanuṣas to the bhujagas. 31

| | **Table** | **Length** |
|---|---|---|
| Sammūrcchima | Khécara | 2 to 9 Dhanuṣas |
| " | Bhuja-parisarpa | |
| " | Uraḥ-parisarpa | 2 to 9 Yojanas |
| " | Catuṣpada | 2 to 9 Gavyūtas |
| " | Jala-cara | More than 1000 Yojanas |

### Size of Garbhaja Catuṣpada and Manuṣyas

**अथ गर्भजचतुष्पदानां देहप्रमाणविशेषं गाथापूर्वार्द्धेन व्याकुर्वन्नाह—**

**छच्चेव गाउआइं चउप्पया गब्भया मुणेयव्वा ।**
**कोसतिगुच्च मणुस्सा, उक्कोससरीरमाणेणं ॥ ३२ ॥**

32 Chaccéva gāuāim cauppayā gabbhayā muṇéyavvā ।
Kosa-tigucca maṇussā, ukkosasarīramāṇéṇam 32

**[ षड्गव्यूतय एव चतुष्पदा गर्भजा ज्ञातव्याः ।**
**कोशत्रिकं च मनुष्या उत्कृष्टशरीरमानेन ॥ ३२ ॥**

Saḍ gavyutaya éva catuṣpadā garbhajā jñātavyāḥ
Koṣatrikam ca Manuṣyā utkriṣṭaśarīramānéna. 32 ]

Trans. 32. The foetus-born quadrupeds are to be understood as six koshas high; while the human beings with their bodies very high are three koshas in height. 32.

**व्याख्या—३२ षड्गव्यूतानि गर्भजाश्चतुष्पदाः 'मुणेयव्वेति' देह प्रमाणेन ज्ञातव्याः । तच्चदेहप्रमाणमुत्कर्षतो देवकुर्वादिगतगर्भजद्विरदानाश्रित्य**

निश्चेतव्यमिति । चकारोऽनुक्तसमुच्चयार्थः । एवेति निश्चयार्थः । इति तिरश्चा-मुत्कृष्टशरीरप्रमाणं व्याख्याय क्रमागतं मनुष्याणामुत्कृष्टदेहप्रमाणं गाथोत्तरार्धेनाह–क्रोशत्रिकोच्चा मनुष्या समासाद्विभक्तिलोपे उत्कृष्टशरीरप्रमाणेनेति। एतत्प्रमाणं प्रथमे सुषमसुषमारके युग्मिनां नृणामवसेयमिति गाथाक्षरार्थः ॥३२॥

D. C. The length of the bodies of the foetus-born quadrupeds is six koshas. This measurement must be determined from the height of the embryo-originating elephants found in the Déva Kurus etc. The term 'ca' adds such things, as are not actually mentioned. 'Eva' has the sense of determination. The embryo-born human beings possess a body of three (3) koshas Such great height is found of the human beings in the Susama-suśama part of the Cycle of Time.

| | Table | Size |
|---|---|---|
| Garbhaja | Jalacara | One Thousand yojanas |
| ,, | Ura-parisarpa | One Thousand yojanas |
| ,, | Bhuja-pnrisarpa | 2 to 9 Gavyūtas |
| ,, | Catuspada | 6 Gavyūtas |
| ,, | Khécara | 2 to 9 Dhanuṣas. |

(e) Heights of Bodies of Dévas

नारकतिर्यग्नराणां शरीरप्रमाणं सूत्रकृद्व्याख्याय देवानामुत्कृष्टं देहप्रमाणं पार्थक्येन व्याचिकीर्षुराह—

ईसाणंतसुराणं रयणीओ सत्त हुंति उच्चत्तं ।
दुग दुग दुग चउ गेविज्जाणुत्तरेक्किक्कपरिहाणी ॥ ३३ ॥

33 Isāṇānta-surānam rayanīo satta hunti uccattam ।
Duga duga, duga, cau Gevijjāṇuttarékkikka parihāṇī 33

[ ईशानान्तसुराणां रत्नयः सप्त भवन्त्युच्चत्वम् ।
द्विक द्विक द्विक चतुष्कग्रैवेयकानुत्तरेष्वेकैकपरिहानिः ॥ ३३ ॥

Iśānāntasurānām ratnyaḥ sapta bhavantyuccatvam
Dvika dvika dvika catuṣka Graivéyaka anuttarésvékaikaparihāniḥ 33 ]

*Trans* 33. The height of the gods upto the Iśāna (dèvaloka) is seven hastas (hands). (There-after) there is the complete loss of one hasta in the other dévalokas in the following gradation:- the (next) two, (then the next two), (then again the next two), (then the next) four (lokas) then the Graivéyakas and (then) the Anuttaras.

व्याख्या-३३-ईशानान्तम्-ईशानदेवलोकं यावत सुराणां-देवानां सप्तरत्नयः-सप्तहस्ता उच्चत्वं शरीरस्य भवन्ति (ति)। अन्तमिति प्राकृतत्वा द्बिन्दुलोपो मात्राभङ्गभयात्। ईशानान्तग्रहणेन उपलक्षणाद्भ वनपतिव्यन्तर ज्योतिष्क सौधर्मेशाना ग्राह्याः। तदग्रतस्त्रिकयुगले एकैकहस्तहान्या शरीरप्रमाणं। एवमष्टौ देवलोकाः। किमुक्तं भवति? सनत्कुमार माहेन्द्रयोः षड्हस्ताः, ब्रह्म-लान्तकयोः पञ्च, शुक्रसहस्रारयोश्चत्वारो हस्ता देहमानं। तदग्रतो देवलोक चतुष्टये नवग्रैवेयकानुत्तरसुरेष्वेकहस्तहान्योत्कृष्टशरीरप्रमाणं भवति। कथं? तदुच्यते-आनतप्राणतारणाच्युतेषु त्रयो हस्ताः, नवग्रैवेयकेषु द्वौ हस्तौ, अनुत्तरेषु हस्तप्रमाणं शरीरमिति। तच्च शरीरप्रमाणं प्रमाणाङ्गुलेभ्योऽथवोत्से-धाङ्गुलेभ्यः केन मिनुयात्? तद्व्याचष्टे। तद्यथा-[1]सरीरमुस्सेहमंगुलेण तहा इति वचनाच्छरीरप्रमाणमुत्सेधाङ्गुलेन ग्राह्यं। उत्सेधाङ्गुलप्रमाणं त्विदं, यथा-"[2]परमाणू तसरेणु रहरेणू वालअग्ग लिक्खा य। जूआ जवो अट्ठगुणा कमेण उस्सेहमंगुलयं" ॥ १ ॥ इति। स्पष्टैव। एतच्च शरीरप्रमाणं भवधारणीयं। उत्तरवैक्रियं तु लक्षयोजनप्रमाणं। यदुक्तं-[3]भवधारणिज्ज एसा, उक्कोस विउव्वि जोयणा लक्खं। गेविज्जणुत्तरेसु उत्तरवेउव्विया णत्थि ॥ १ ॥ प्रकटार्थो।

---

१ शरीर उत्सेधाङ्गुलेन

२ परमाणुस्त्रसरेणुः रथरेणुर्वालाग्रं लिक्षा च।
युका यवः अष्टगुणाः क्रमेण औत्सेधमङ्गुलकम् ॥ १ ॥

३ भवधारणीया एषा उत्कृष्टा वैक्रियं (औत्तरं) योजनानि लक्षम्।
ग्रैवेयकानुत्तरेषु उत्तरवैक्रियाणि न सन्ति ॥ १ ॥

तथा ग्रैवेय-केष्वनुत्तरेषूत्तरवैक्रियं नास्ति । तत्सत्यामपि शक्तो प्रयोजनाभावे तदकरणादिति संटंक,(एतश्च) ग्रन्यकृतानोक्तं तथापि प्रक्रमादुक्तमित्यर्थः ॥२३॥

D. C "Iśānāntam" means upto the Iśāna Déva-loka Ratnis are the hastas (measure of a hand). The déva-lokas meant are the abodes of the Bhavana-patis, the Vyantaras, the Jyotiskas, Saudharma and the Iśāna. After these for three couples of the déva-lokas, there is the loss of one hasta each, in the height of the body of the deities What is meant is this

| Deva-lokas | Height in Hastas |
|---|---|
| 1 Bhavana-pati, Vyantaras Jyotiska, Saudharma and Iśāna | .........7 Hastas |
| 2 Sanat Kumāra+Māhéndra | .................6 „ |
| 3 Brahma and Lāntaka | ...................5 „ |
| 4 Śukra and Śahasrāra | ................. 4 „ |

Again, for the group of the next four déva-lokas, the Nava-Graivéyakas and the Anuttaras, there is the loss of one hasta in due gradation

Thus:—

| Devalokas | |
|---|---|
| 5 Ānata Prāṇat Āraṇa+Acyuta | 3 Hastas |
| 6 Nava Graivéyaka | 2 „ |
| 7 Anuttara | 1 Hasta |

This measurement is to be taken with the help of Utsédha angula, and not of pramāṇa angula.

The measure of utsedha angula is given thus:—Paramāṇu, Trasaréṇu, Rathaténu, Vālāgra, Likṣā, Yukas, Yavas and aṣṭa guṇas in their respective order is the measure of an Utsedha angula.

## Table of Utsédha Aṅgula.

| | |
|---|---|
| Ananta Sûkṣma Paramāṇu. | = 1 Vyavahāra Paramāṇu |
| | = 1 Utślakṣṇa ślakṣṇika |
| 8 Utślakṣṇoślakṣnika | = Ślakṣṇa ślakṣṇika |
| 8 Ślakṣṇaslakṣnika | = 1 Urdhava-réṇu |
| 8 Urdhva-rénu | = 1 Trasa-réṇu |
| 8 Trasa-rénu | = 1 Ratha-rénu |
| 8 Ratha-réṇu | = Kuru-yugalika Vālāgra |
| 8 Ends of Hair of yugalikas of Purvāpara Videha | = 1 End of Hair of yuga-likas of Bharata and Airavata |
| 8 End of Hair of yugalikas of Bharata+Airavata | = 1 Likṣā (egg of a louse) |
| 8 Liksā (eggs of a louse) | yūka (louse) |
| 8 Yukas (lice) | yava (barley-grain) |
| 8 Yavas (barley-grains) | Utsédha Aṅgula |
| 400 Utsédha Aṅgulas | Pramāṇa Aṅgula |
| 6 Utsédha Aṅgulas | Pāda |
| 2 Pāda | Vénta (वेंत) Cubit |
| 2 Cubits | = 1 Hasta (hand) |
| 2 Hastas (Hands) | = 1 Kukṣi |
| 2 Kukṣi or Vāma or 4 Hasta or 96 Angulas | = Daṇḍa or Dhanuṣya or yuga-musala nalikā |
| 2000 Dhanuṣyas | = 1 Gāu (Gavyuta) |
| 4 Gavyutas | = 1 Yojana |

The measure of the height of the bodies of the gods discussed above, is that possessed by the different types of gods at the time of their birth. It is their bhavadhāraṇīya avagāhanā (size acquired by birth) as a different type of god.

The magnitude of their uttaravaikriyaka body may extend to one hundred thousand (100000) yojanas

It may be noted here, however, that Nava Graivéyaka and Anuttara Vimāna-gods do not assume uttara-vaikriyaka forms.

**Table**

| Kind of gods | Height |
|---|---|
| 1 Bhavana-pati, Vyantara, Vāṇavyantara, Jyotiṣka, Tiryak Jrimbhaka, Parmādhārmika, Saudharma, Iśāna dévaloka First Row of Kilbiṣika gods. | 7 Hastas |
| 2 Third and Fourth Deva-lokas. Second Row of Kilbiṣikas | 6 |
| 3 Fifth and Sixth Devalokas. Third Row of Kilbiṣikas, Lokāntika gods | 5 |
| 4 Seventh and Eighth Deva-lokas. | 4 |
| 5 Ninth, Tenth, Eleventh, and Twelfth Deva-lokas | 3 |
| 6 Gods of the Nava Graiveyaka Vimāns | 2 |
| 7 Gods of the Five Anuttara Vimāns | 1 |

**Āyuṣya (Duration of Life)**

(a) Duration of Life of Ekéndriya Jīvas.

**एतावता एकेन्द्रियादीनां शरीरप्रमाणद्वारं व्याख्यातं, अथ आयुद्वारं विवरीषुराह–**

**बावीसा पुढवीए सत्त य आउस्स तिन्नि वाउस्स ।**
**वाससहस्सा दस तरुगणाण तेऊ तिरत्ताऊ ॥ ३४ ॥**

34 Bāvīsā Puḍhavīé satta ya Āussa tinni Vāussa ।
Vāsasahassā dasa taru gaṇāṇa Téū ti-rattāū 34

[द्वाविंशतिः पृथिव्याः सप्तापकास्य त्रीणि वायुकायस्य ।
वर्षसहस्रा दश तरुगणानां तेजस्कायस्य त्रीण्यहारोत्राण्यायुः ॥ ३४ ॥

Dvā-vimśatiḥ Prithivyaḥ sapta Ap Kāyasya, trīṇi Vāyukāyasya । Varsahasrā daśa taru-gaṇānām Téjaskāyasya triṇyahorātrāṇyāyuḥ 34 ]

*Trans.* 34. The duration of life of the earth is twenty-two thousand (22000) years; that of the water-bodied souls is seven thousand (7000) years; that of the wind-bodied is three thosand (3000) years (while) that of the collection of trees in ten thousand (10000) years, and that of the collection of fire is three days and three nights.

व्याख्या—३४. आयाति भवाद्भवान्तरं सङ्क्रमतां जन्तूनां निश्चयेनोदयमित्यायुः । आयुषिना (चा) यं न्यायः । तस्य तद्भवेऽत्रे (व एव वे) दनात् । तथा तेजस्कायं विहाय चतुर्षु कायेषु उत्कृष्टायुः स्थित्या सह सहस्रशब्दोऽभिसम्बध्यते । बावीसेति स्त्रीत्वाच्चनिर्देशः तथाहि द्वाविंशतिर्वर्षसहस्राः पृथ्वीकायिकानामुत्कृष्टायुः स्थितिः । एवं अप्कायिकानां सप्तवर्षसहस्राः उत्कृष्टायुः स्थितिः । वायुकायिकानां त्रयो वर्षसहस्रा उत्कृष्टायुः स्थितिः । " तरुगणाणं ति " तरुग्रहणात्प्रत्येकवनस्पतिकायिकानां दश वर्षसहस्रा उत्कृष्टयुः स्थितिः । "तेऊ तिरत्ताउ त्ति विभक्तिव्यत्ययात षष्ठ्यर्थे प्रथमा, ततस्तेजस्कायिकानां त्रीण्यहोरात्राण्युत्कृष्टायुःस्थितिः । इत्युक्ता पञ्चानामपि स्थावराणामुत्कृष्टायुः स्थितिः । जघन्या तु सर्वेषामपि आन्तर्मौहुर्त्तिकी । जघन्योत्कृष्टान्तर्वर्तिनी स्थितिर्मध्यमा । जघन्यमध्यमस्थिती अनुक्ते अप्यवसेये । तथा यद्यपि सूत्रकारेण पृथ्वीकायभेदेषूत्कृष्टस्थितिविशेषो विशेषेण नोक्तः, तथापि प्रपञ्चयते । तथाहि—सण्हा १ य शुद्ध २ वालुय ३ मणोसिला ४ सक्करा य ५ खर पुढवी ६ । एग बार चउद सोलसढार बावीस समसहस्सा ॥ १ ॥

श्लक्ष्णा—मरुस्थलयादिगता पृथ्वी १, शुद्धा—कुमारमृत्तिका २, वालुकाः

१ श्लक्ष्णा शुद्धपृथ्वी च वालुका मनः शीला शर्करा च खर पृथ्वी ।
एक द्वादश चतुर्दश षोडशाष्टादशद्वाविंशतिसहस्रवर्षाणि (यथाक्रमं पूर्वेसां) ॥ १ ॥

सिकताः ३ मनःशिला-प्रसिद्धा ४ शर्करा-दृषत्कर्करिकाः ५ खरपृथ्वी-शिला-पाषाणरूपा ६ आसां षण्णामपि क्रमादुत्कृष्टस्थितिरेको द्वादश चतुर्दश षोडशादय द्वाविंशतिः वर्षाः समाः सहस्रास्तावन्मितवर्षसहस्रा इत्यर्थः ॥ ३४ ॥

*D. C.* Here, the duration of life of one-sensed living beings is given. The coming (āyati) to one state of existence from another state, of the living beings that transmigrate from birth to birth, is called āyuḥ The period occupied by that life of existence is its āyuḥ (period of life). The word thousand' is to be construed with all the words denoting the highest limit of life, of course, excluding the case of the Téjaskāya

. What is meant is this:-The highest limit of the life of the beings embodied in 'Prithvi' (the earth) is twenty-two thousand (22000) years. Similarly, the highest limit of the life of water-bodied souls is seven thousand (7000) years; while that of the wind-bodied ones is three thousand (3000) years, and that of the vegetables is ten thousand (10000) years. The word 'tree' has the sense of Pratyéka (one-souled) vegetables. Lastly, the the highest limit of the life of Téjaskāyika (fire-bodied) beings is three days and three nights.

The lowest limit falls within even a Mahūrta (an Instant), while the middle limit falls in between the highest and the lowest boundaries -

To be more clear on the distinction of the six varieties of the earth-bodied beings

**Table**

| | Kinds of earth | Duration of Life |
|---|---|---|
| 1 | Ślakṣnā or the deserts | 1000 Years |
| 2 | Śuddhā or the virgin soil | 12000 Years |
| 3 | Vālukā or the Sands | 14000 Years |

| | | |
|---|---|---|
| 4 | Manaha śîla or Red arsenic | 16000 Years |
| 5 | Śarkarā or Stone-pieces | 18000 Years |
| 6 | Kharaprithvî or the hard earth in the form of big stones and rocks | 22000 Years |

(b) Highest Duration of Life of Vikaléndriya Beings.

इत्युदिता पृथ्व्यादीनांमुत्कृष्टायुः स्थितिः द्वीन्द्रियादीनामायो त्कृष्टायुः स्थित स्पष्टयन्नाह—

वासाणि बारसाऊ बेइंदियाणं तेइंदियाणं च ।
अउणापन्नदिणाणं चउरिंदीणं तु छम्मासा ॥ ३५ ॥

35 Vāsāṇi bārasāü bé-indiyāṇam tè indiyāṇam ca ।
Aüṇāpannadiṇāṇam Caurindîṇam tu chammāsā 35

[ वर्षाणि द्वादशायुर्द्वीन्द्रियाणां त्रीन्द्रियाणां तु ।
एकोनपञ्चाशद्दिनानि चतुरिन्द्रियाणां तु षण्मासाः ॥ ३५ ॥

Varṣāṇi dvādaśay-r-dvîndriyāṇām trîndriyāṇām tu
Ekonapancāśad dināni caturindriyāṇam tu ṣaṇmāsāḥ 35 ]

*Trans.* 35. The life-time of the Two-sensed beings is twelve (12) years, and that of the Three-sensed being is forty-nine (49) days; while (tu) that of the Four-sensed ones is six (6) months.

व्याख्या–३५–आयुःशब्दः प्रत्येकमभिसम्बध्यते। वर्षाणि द्वादश द्वीन्द्रियाणामुत्कृष्टायुः स्थितिः। त्रीन्द्रियाणां त्वेकोनपञ्चाशद् दिनान्युत्कृष्टायुः स्थितिः। अत्र छन्दोभङ्गभयात् 'इ' स्वरस्य पृथगभिधानं। चः पृथगभिधाने। चतुरिन्द्रियाणां तु षण्मासा उत्कृष्टायुः स्थितिः। तुरेवार्थे। इति गाथाक्षरार्थः॥३५॥

*D. C.* The word āyuḥ (life-time) is to be construed everywhere, the highest limit of the life of two-sensed beings, is twelve (12) years; that of Tri-indriya beings is only forty-nine days. The word ca (and) has the sense of separate mention.

The highest limit of the life of caturindriya living being is six (6) months. The term tu (while) means éva (of course). 35

(c) Duration of Life of Dévas (gods)
Nārakas (hellish beings)-Garbhaja
Catuṣpada Tiryancas-Manuṣyas.

द्वीन्द्रियादीनामुत्कृष्टायुः स्थितिमभिधाय, देवादीनां चतुर्णामपि पञ्चेन्द्रियाणामुत्कृष्टायुः स्थितिं विवृण्वन्नाह—

सुरनेरइयाण ठिई उक्कोसा सागराणि तित्तीसं ।
चउपयतिरियमणुस्सा तिन्नि य पलिउवमा हुंति ॥ ३६ ॥

36 Sura Néraiyāna thiī ukkosā sāgarāṇi tittīsam
Caupayatiriyamaṇussa tinniya paliuvama hunti 36

[ सुरनैरयिकाणां स्थितिरुत्कृष्टा सागरोपमाणि त्रयस्त्रिंशत् ।
चतुष्पदतिर्यञ्चमनुष्याणां त्रीणि च पल्योपमानि भवन्ति ॥ ३६ ॥

Sura Nairayikāṇām sthitrutkriṣtā sāgaropamāṇi trayastrimśat ।
Catuṣpadatiryanca manuṣyāṇām trīṇi ca palyopamani bhavanti 36 ]

*Trans.* 36. The highest limit of the life of the gods and of the infernal beings, is thirty-three (33) sāgaropamas, while that of the quadrupeds tiryancas, (lower animals), and of human beings is three 3 palyopamas. 36

व्याख्या—३६—सुरनारकाणामुत्कृष्टायुः स्थितिस्त्रयस्त्रिंशत्सागरोपमाणि । उभयोस्तुल्यस्थितिकत्वादुत्कृष्टस्थितावित्येकत्राभिधानं । तथा चतुष्पदतिर्यग्मनुष्याणां त्रीणिपल्योपमानि । यदुक्तं- मणुआण सम गयाई, हयाइं चउरंसऽजाइ अट्ठंसा । गोमहिसुट्टखराई, पणंस साणाइ दसमंसा ॥ १ ॥ इच्चाइ तिरिच्छाण वि पायं सव्वारएसु सारिच्छं " इति प्रायो बाहुल्येन सर्वारकेषु मनुजायुः समायुषो गजसिंहसर्पादयः मनुजायुश्चतुर्थांशायुषस्तुरगवेसरादयः । अष्टांशायुषोऽजोरणकादयः । पञ्चमांशायुषो गोमहिष्युष्ट्रखरादयः । दशमांशायुषश्च वृकचित्रकादयः । इत्यादि तिरश्चां सर्वारकेषु सादृश्यं दृश्यते । उत्कृष्टस्थितेरधो मध्यमजघन्यस्थिती अवसेये । अत्र षष्ठ्यर्थे प्रथमा । तथेह पल्योपमसागरोपमयोः स्वरूपं सूत्रेऽनुक्तमपि प्रदर्श्यते, तद्यथा—तत्र धान्यपल्यवत्पल्यस्तेनोपमा यस्य

कालप्रमाणस्य तत्पल्योपमं। तत्त्रिधा-उद्धारपल्योपमं, अद्धापल्योपम, क्षेत्रपल्योपमं च। तत्र वालाग्राणां तत्खण्डानां वा प्रतिसमयंमुद्धारस्तद्विषयं तत्प्रधानं वा पल्योपममुद्धारपल्योपमं १। अद्धा-कालः, स च कालः प्रस्तावाद्वालाग्राणां तत्खण्डानां वा प्रत्येकं वर्षशतलक्ष (णः) णं तत्प्रधानमद्धापल्योपमं २। क्षेत्रमाकाशप्रदेशरूपं तत्प्रधानं क्षेत्रपल्योपमं ३। तत्पल्योपमं पुनरेकैकं द्विधा-बादरं सूक्ष्मं च। तत्रायामविस्ताराभ्यामवगाहेनोत्सेधाङ्गुलनिष्पन्नैकयोजन प्रमाणो वृत्तत्वाच्च परिधिना किञ्चिन्न्युनषड्भागाधिकयोजनत्रयमानः पल्यो मुण्डिते शिरसि एकेनाह्ना द्वाभ्यामहोभ्यां यावदुत्कर्षतः सप्तभिरहोभिः प्ररूढानि यानि वालाग्राणि तानि प्रचयविशेषान्निविडतरमाकर्ण तथा भ्रियते यथा तानि वालाग्राणि वह्निर्न दहति वायुर्नापहरति जलं न कोथयति। यदुक्तत्-तेणं वालग्गा नो अग्गी डहेज्जा, नो वाउ हरेज्जा, नो सलिलं कुत्थिज्जा" इत्यादि। ततः किमित्याह-"तत्तो समए, इक्किके अवहियम्मि जो कालो त्ति" ततः समये समये एकैकवालाग्रापहारेण यावता कालेन स पल्यः सकलोऽपि सर्वात्मना निर्लेपो भवति, तावत्कालः सङ्ख्येयसमयमानो बादरमुद्धारपल्योपमो भवति। एतेषां च दश कोटीकोटयो बादरमुद्धारसागरोपमं, महत्त्वात्सागरेण समुद्रेणोपमा यस्येतिकृत्वा बादरे च प्ररूपिते सूक्ष्मं सुखावसेयं स्यादिति बादरोद्धारपल्योपमसागरोपमयोः प्ररूपणं। न पुनरेतत्प्ररूपणेऽन्यद्विशिष्टं फलमस्तीति। एवं बादरेष्वद्धाक्षेत्रपल्योपमसागरोपमेष्वपि वक्तव्यं। एकैकं वालाग्रं असङ्ख्येयानि खण्डानि कृत्वा पूर्ववत्पल्यो भ्रियते। तानि खण्डानि द्रव्यतः प्रत्येकमत्यन्तशुद्धलोचनछद्मस्थो यदतीवसूक्ष्मपुद्गलद्रव्यं चक्षुषा पश्यति तदसङ्ख्येयभागमात्राणि क्षेत्रतस्तु सूक्ष्मपनकशरीरं यावति क्षेत्रऽवगाहते ततोऽसङ्ख्येयगुणानि, बादरपर्याप्तपृथ्वीकायिकशरीर-तुल्यानीति वृद्धाः। ततः प्रतिसमयं एकैक खण्डापहारेण सर्वो निर्लेपनाकालः सङ्ख्येयवर्षकोटीप्रमाणः सूक्ष्ममुद्धारपल्योपमं तद्दश कोटीकोटयः सूक्ष्ममुद्धारसागरोपमं। आभ्यां च सूक्ष्मोद्धारपल्योपमसागरोपमाभ्यां द्वीपसमुद्राश्च मीयन्ते। तथा वर्षशते वर्षशतेऽतिक्रान्ते पूर्वोक्तपल्यादेकैकवालाग्रापहारेण सकलो निर्लेपनाकालः

सङ्ख्येयवर्षमाना बादरमद्धापल्योपमं । तद्दश कोटीकोटयो बादरमद्धा-सागरोपमं । तथैव वर्षशते वर्षशते एकैकवालाग्रअसङ्ख्येयतमखण्डापहारेण निर्लेपनाकालोऽसङ्ख्यातवर्षकोटीमानः सूक्ष्ममद्धापल्योपमं । तद्दश कोटी-कोटयः सूक्ष्ममद्धासागरोपमं । तद्दशकोटीकोटयोऽवसर्पिणी । एतावत्प्रमाणैव चोत्सर्पिणी । उत्सर्पिण्योऽनन्ताः पुद्गलपरावर्तः । अनन्ताः पुद्गलपरावर्ता अतीताद्धा, तथैवा नागताद्धा । अत्रातीताद्धातोऽनागताद्धाया अनन्तगुणत्वं समयावलिकादिभिरनवरतं क्षीणमाणाया अप्यनागताद्धाया अक्षयात्, एतच्च मतान्तरं । तथा च भगवतीविवरणे वृद्धगाथा–[1] "अहवा पडुच्चकालं, न सव्वभव्वाण होइ वुच्छित्ती। जं तीयाणागयाओ अद्धाओ दोवि तुल्लाओ ॥१॥" अयमभिप्रायः–यथाऽनागताद्धाया अन्तो नास्ति एवमतीताद्धाया आदिरिति व्यक्तं समत्वमिति । तथाऽऽभ्यां च सूक्ष्माद्धापल्योपमसागरोपमाभ्यां सुरनारक-नरतिरश्चां कर्मस्थितिः भवस्थितिश्च मीयते । तथा प्राग्वत्पल्यो वालाग्रस्पृष्ट-नभःप्रदेशानां प्रतिसमयमेकैकापहारेण निर्लेपनाकालोऽसङ्ख्योत्सर्पिण्यवसर्पि-णीमानो बादरं क्षेत्रपल्योपमं । तद्दशकोटीकोटयो बादरं क्षेत्रसागरोपमं । तथैव असङ्ख्यातखण्डाकृतवालाग्रैः स्पृष्टानामस्पृष्टानां च नभः प्रदेशानां प्रति समयमेकैक नभः प्रदेशानामपहारेण निर्लेपनात् बादरादसङ्ख्येयगुणकालमानं सूक्ष्मं क्षेत्रपल्योपमं, * प्राग्वत्सागरोपमं च । एताभ्यां सूक्ष्म क्षेत्रपल्योपम-सागरोपमाभ्यां पृथिव्युदकाग्निवायुवनस्पतित्रसजीवानां प्रमाणं ज्ञातव्यं, एतच्च प्राचुर्येण, प्रायो दृष्टिवादे द्रव्यप्रमाणचिन्तायां प्रयोजनं सकृदेव, अन्यत्र चोद्धाराद्धाक्षेत्रपल्योपमानामप्येतान्येव प्रयोजनानि दृष्टव्यानि, इह हि सूक्ष्माद्धापल्योपमेन प्रयोजनम् ॥ ३६ ॥

१ अथवा प्रतीत्यकालं न सर्वभव्यानां भवति व्युच्छित्तिः ।
यदतीतानागते अद्धे द्वे अपि तुल्ये ॥ १ ॥

* Palyopama is a period of time counted according to a simili of a huge cup-like hollow viz the time which is required

| | |
|---|---|
| 10 Crore-crore of Sūkṣma Uddhāra Palyopama | = Sūkṣma (subtle) Uddhāra sāgaropama |
| 10 Crore-crore of Bādāra Addhā Palyopama | = Bādara ( gross ) Addhā sāgaropama |
| 10 Crore-crore of Sūkṣma Addhā Palyopama | = Sūkṣma (subtle) Uddhāra sāgaropama |
| 10 Crore-crore of Bādara Sāgaropama | = 1. Avasarpiṇi or Utsarpiṇi |

The term Sāgaropama is very easy It means that which is compared to a sea due to its greatness

The Utsarpiṇis collected to infinity make one Pudgala-parāvarta Innumerable Pudgala-parāvartas make one *Atītāddhā* or *Anāgatāddhā*

It is said that there is no end to the anāgatāddhā and there is no beginning to the atītāddhā.

The different states of action, body, and existence of the gods, of infernal beings and of lower animals, are measured with the help of the sūkṣma (subtle) addhā-palyopams and of sūksma (subtle) sāgaropams.

In the same way, the bādara gross) Kṣètra palyopama, and bādara (gross) Kṣetra sāgaropma and the sūkṣma (subtle) kṣétra-palyopama and the sūkṣma (subtle) Kṣètra sāgaropama are to be counted.

With the help of the latter two, viz sūksma-ksetra palyopama and sūkṣmaksetra sagaropama, are measured the proportions of the earth, water, fire vegetable and Movable Beings 36.

The highest limit of the period of life of manuṣyas (human beings) and tiryanca (lower animals) in Bharata and Airvata Kṣétras durning the first ara of Cycle of Time is three palyopams.

The lowest limit of the period of life of the dévas ( gods ) and Nārakas (Infernal beings) is ten thousand (10000) years, and

that of manuṣyas (human beings) and tiryancas (lower animals) is antar-muhūrta.

(d) Highest Duration of Life of Garbhaja Pañcéndriya Tiryancas.

ततः सुरनारकमनुष्यचतुष्पदतिरश्चामुत्कृष्टायुः स्थितिं ब्रुवन्नाह—

जलयर–उर–भुयगाणं परमाऊ होइ पुव्वकोडीओ।
पक्खीणं पुण भणिओ असंखभागो य पलियस्स ॥ ३७ ॥

37. Jalayara–ura–bhuyagāṇam paramāū höi puvva-kodīö,
Pakkhīnam puna bhaṇiö asamkhabhāgo ya paliyassa. 37

[ जलचरोरगभुजगानां परमायुर्भवति पूर्वकोटी तु।
पक्षिणां पुनर्भणितोऽसङ्ख्येयभागः पल्योपमस्य ॥ ३७ ॥

Jalacar–oraga bhujagānām parmāyu–r–bhavati pūrva koti tu,
Pakṣiṇām puna–r–bhaṇito' samkhyéya bhāgaḥ palyopamasya 37 ]

*Trans.* 37. The highest period of life for the aquatic, the creeping, and the arm-moving creatures is a crore Pūrva. The innumereble part of a Palyopama is, however, declared for the birds. 37.

व्याख्या ३७–जलचरग्रहणेन गर्भजसंमूर्छिम जलचरग्रहणमेकस्थितिकत्वात्। जलचरोरगभुजगानां परमायुः–उत्कृष्टायुःस्थितिः पूर्वकोटिः। मकारोऽलाक्षणिकः। इह हि पूर्वप्रमाणमेतत्–'पुव्वस्स य परिमाणं सयरिं खलु वासकोडिलक्खाओ। छप्पन्नं च सहस्स, बोद्धव्वा वासकोडीणं ॥ १ ॥ इत्येकपूर्वप्रमाणं। एतादृक पूर्वकोटीप्रमाणमुत्कृष्टायुरिति तात्पर्यं। तथा पक्षिणां पुनः पल्योपमस्य असङ्ख्यातभागमुत्कृष्टायुरिति। इत्युक्ता जलचरोरगभुजगानामुत्कृष्टायुः स्थितिः इह हि सूत्रकृता संमूर्छिम पञ्चेन्द्रियाणां स्थलचराणामुत्कृष्टायुः स्थितिर्नोक्ता तथापि प्रक्रमादुच्यते–संमुच्छिमपणिंदियथलखयरुरगभुजगजिट्ठठिइ कमसो। वाससहस्सा चुलसी, बिसत्तरि तिपण्ण बायाला ॥१॥

इति संमूर्छिम-पञ्चेन्द्रिया ये स्थलचरा गवादयः १ । खचरा पक्षिणो बककाकादयः २ । उरगाः सर्पादयः ३ । भुजगा गृहगोधादयः ४ । क्रमात्तेषां ज्येष्ठा स्थितिश्चतुरशीतिः १ द्वासप्ततिः २ । त्रिपञ्चाशत् ३ द्विचत्वारिंशच्च वर्षसहस्रा इत्यर्थः ॥ ३७ ॥

*D. C.* The aquatic animals of both the *garbhaja* and the Sammūrcchima kinds are to be understood here The highest limit of the duration of life for the aquatic, breast-moving, and arm-moving beings is one crore Pûrvas

The measurement for a Pûrva is as under:—

1 Pûrva=7056000 Crores of years. The highest limit for the life-time of birds is the asamkhyato part of Palyopama

Here the author of the aphorisms has not mentioned duration of life for the sammūrcchima five-sensed land-going beings. Still, it will not be out of place to make that point clear also

**Table**

| Sammūrcchima Type of Being | Highest Limit of Life |
|---|---|
| 1. Land-going beings e g. bull | 84000 years |
| 2. Birds e.g. crane, crow | 72000 years |
| 3. Creeping Beings e g. serpents | 53000 years |
| 4. Arm-going animals | 42000 years |

(d) Highest Limit of Life of Sukṣma Ekéndriya, Sādhāraṇa Vanaspati Kāya and-Sammūycchima Manusyas.

इयता पञ्चानामपि संमूर्छिमपञ्चेन्द्रियतिरश्चांमुत्कृष्टायु स्थितिमुक्त्वा सामान्येन जघन्योत्कृष्टैकस्थितिकानां सूक्ष्मसाधारणपञ्चेन्द्रियमनुष्याणां विशेषं प्रकटयन्नाह—

सव्वे सुहुमा साहारणा य संमुच्छिमा मणुस्सा य ।
उक्कोसजहन्नेणं अंतमुंहुत्तं चिय जियंति ॥ ३८ ॥

38. Savvé suhumā sāhāraṇāya sammūcchima mssṇuṣṣā ya,
Ukkosajahannéṇam anta-muhuttam ciya jiyanti 38

[ सर्वे सूक्ष्माः साधारणाः संमूर्छिमा मनुष्याः ।
उत्कर्षेण जघन्येनाऽन्तर्मुहुर्तमेव जीवन्ति ॥ ३८ ॥

Sarvé sûkṣmāḥ sādhāraṇāḥ sammûrchimā manuṣyāḥ,
Utkarṣeṇa jaghanyénā, nta-r-muhūrtaméva jivanti 38 ]

*Trans.* 38. All the subtle, many souled ( sādharaṇa ) (and) universally expanding ( sammūrcchima) human beings, live only for muhûrta in the highest (or) the lowest limit 38.

व्याख्या-३८-सर्वे सूक्ष्माः पृथ्व्यप्तेजोवायुवनस्पतिरूपाः साधारणा अनन्तकायिकाः । चः समुच्चये । संमूर्छिमा मनुष्याः । च पुनरर्थे । तत्र के ते संमूर्छिम मनुष्याः ? एकोत्तरशतक्षेत्रसमुत्पन्न गर्भजमनुष्याणां वान्तादिषूत्पन्नाः, यदुक्तमागमे-[1]"कहिणं भंते ! संमुच्छिमा मणुस्सा संमुच्छंति ? गोयमा ? अंतोमणुस्सखेत्ते पणयालीसाए जोयणसयसहस्सेसु गब्भवक्कंतियमणुस्साणं चेव उच्चारेसु वा पासवणेसु वा खेलेसु वा संघाणेसु वा वंतेसु वा पित्तेसु वा सुक्केसु वा सोणिएसु वा सुक्कपुग्गलपरिसाडेसु वा विगयजीवकडेवरेसु वा थीपुरिससंगमेसु वा नगरनिद्धमणेसु वा सव्वेसु चेव असुइट्ठाणेसु इत्थणं संमुच्छिममणुस्सा संमुच्छंति अंगुलस्स असंखिज्जभागमित्ताए ओगाहणाए असन्निमिच्छादिट्ठी सव्वाहिं पज्जत्तीहिं अपज्जत्ते अंतोमुहुत्ताउयं चेव कालं करेंति" । तथा बादरनिगोदविशेषं पुनरागमाद् दर्शयति, तथा चोक्तं-[2]"नियोगपज्जत्तए बायरनियोगपज्जत्तए य पुच्छा ? गोयमा । दोण्ह वि

---

१ क्व भदन्त ? समूर्छिमा मनुष्याः संमूर्च्छन्ति ? गौतम ! अन्तर्मनुष्यक्षेत्रस्य पञ्चचत्वारिंशति योजनशतसहस्रेषु गर्भव्युत्क्रान्तिकमनुष्याणामेव उच्चारेषु वा प्रश्रवणेषु वा श्लेष्मासु वा सिङ्घाणकेषु वा वान्तेषु वा पित्तेषु वा शुक्रेषु वा शोणितेषु वा शुक्रपुद्गलपरिशाटेषु वा विगतजीवकलेवरेषु वा स्त्रीपुरुषसंगमेषु वा नगरनिर्गमनेषु वा सर्वेष्वेवाशुचिस्थानेषु अत्र समुर्च्छिममनुष्याः संमूर्च्छन्ति । अङ्गुलस्य असंख्येयभागमात्रया अवगाहनया असंज्ञिमिथ्यादृष्टिः सर्वाभिः पर्याप्तिरपर्याप्तः अन्तर्मुहूर्त्तायुष एव कालं कुर्वन्ति ।

२ निगोदपर्याप्ति बादरनिगोदपर्याप्ति च पृच्छा ? गौतम द्वयोरपि जघन्येनोप्युत्कर्षेणापि अन्तर्मुहूर्त्तायुरिति

जहन्नेण वि उक्कोसेण वि अंतोमुहुत्ताउअमिति"। अथैते सर्वे पूर्वोक्ता उत्कृष्टतो जघन्यतोऽन्तर्मुहूर्तायुषस्तत्किम्? उच्यते, मुहूर्तस्य असङ्ख्यातभेदत्वादति गाथार्थः ॥ ३८ ॥

*D. C.* The sūkṣma (subtle) beings, are the minute beings in the form of the elements viz Earth Water, Light, Wind, and the Vegetables (Sādhārana many-souled) beings are the living beings that have many souls in only one body The term 'Ca (and) used twice expresses addition.

Sammūrcchima Manuṣyas are those living beings that originate from the foeces, or urine, or coughed-out material or nasal secretions or vomited matter or bile or semen or blood, or, cloth saturated with semen or dead bodies or sexual intercourse with a male and a female, or cesspool of the town, or all dirty places, and the like of the embryo-born human beings in the 101 Kṣétra (places) within the 45 hundred thousand yojanas of the Manuṣya-kṣétra.

The heighest and the lowest limits of all these fall within a Muhūrta; for, a Muhūrta is divided into asaṅkhyāta parts. (38).

पूर्वोक्तद्वारद्वयं निगमयन्नाह—

ओहागणा–ऽऽउमाणं एवं संखेवओ समक्खायं।
जे पुण इत्थ विसेसा विसेस–सुत्ताउ ते णेया ॥ ३९ ॥

39 Ohāgaṇā" āumāṇam évam saṅkhévaö samakkhāyam ।
Jé puṇa ittha visésā visésasuttau té ṇéyā 39.

[ अवगाहनाऽऽयुर्मानमेवं संक्षेपतः समाख्यातम्।
ये पुनरत्र विशेषा विशेष-सूत्रेभ्यस्ते ज्ञेयाः ॥ ३९ ॥

Avagāhanā āyurmanévam saṅkśepataḥ samākhyātam ।
Yé punaratra viśeṣā viśeṣasūtrébhyasté jnéyāḥ 39 ]

*Trans.* 39. In this way, the length of the body, as well as, the period of life, Have been succintly enumerated. However, the details in this matter are to be known from the Main Sources.

व्याख्या–३९–मानशब्द उभयत्र योज्यते । तत्र ओगहनेति-अवगाहन्तेऽत्रतिष्ठन्ते जीवा अस्यामित्योगाहना अवगाहना वा शरीरमानमायुर्मानं च पूर्वोक्तप्रकारेण । संक्षेपेणेति सर्वजीवाश्रयणात् सर्वेषामेकेन्द्रियादिपञ्चेन्द्रियपर्यन्तानां । समाख्यातमुत्कृष्टतया । तथा ओगाहना सर्वजघन्याऽङ्गुलासङ्ख्येय भागमात्रा । जघन्यमायुरन्तमुहूर्त्तमेव सामान्यतयोक्तं । ये पुनरोगाहनायुर्विशेषा उत्कृष्टमध्यमजघन्यप्रमाणरूपा जात्यादिविशेषाश्रयेण नोक्ताः ते विशेषसूत्रात् प्रज्ञापनोपाङ्गरूपादेरवसेया इति गाथार्थः ॥ ३९ ॥

*D. C.* The term māna (length) is to be construed both with body and life Avagāhanā means that in which the souls are conditioned i-e the body. The measure of body and the measure of life, are mentioned here in brief, for they pertained to all creatures in general from the One-sensed living beings to the Five-sensed beings What is declared here is rather the highest possible limit of body and life. The lowest possible limit of life is expounded here only in general terms, and of such beings as live not more than a Muhūrta. While the details regarding the highest middle and lowest limitations pertaining to the different classes and the like, are not given here, and so, they are to be understood from the special Sūtras like the Prajñāpanā Sūtra-Jivā jīvābhigama Sūtra, Brihat Saṅgrahiṇī etc

## 3. Existence in the Same Body

(a) Of Exéndriya Living Beings.

अथ स्वकायस्थितिद्वारं विवृणोति—

एगिंदिया य सव्वे असंखउस्सप्पिणी सकायम्मि ।
उववज्जंति चयंति य, अणंतकाया अणंताओ ॥ ४० ॥

40 Egindiyā ya savvé asaṅkha Ussappiṇī sa kāyammi ।
Uvavajjanti cayanti ya Aṇantakāyā aṇantāö 40

[ एकेन्द्रियाः सर्वेऽसंख्येयोत्सर्पिण्यवसर्पिणीः स्वकाये ।
उत्पद्यन्ते च्यवन्ते चानन्तकाया अनन्ताः ]॥ ४० ॥

Ekéndriyaḥ sarvé asaṅkhyéyotsarpinyavasarpinīḥ svakāyé ।
Utpadyante cyavanté ca Anantakāyā anantāḥ 40 ]

*Trans.*-40. All the One-sensed living beings originate, and die in their own bodies for (a period of time covered by) asaṅkhyéya (innumerable) Utsarpiṇis and Avasarpinis; and Ananta kāyika (Infinite-bodied) ones originate and die in their own bodies for ananta (infinite) Utsarpiṇis and Avasarpiṇīs. (40)

व्याख्या-४०-एकेन्द्रियाः सर्वे पृथिव्यप्तेजोवायवो असङ्ख्येय उत्सर्पिण्यवसर्पिण्यः स्वकाये मृत्वा तत्रैव उत्पद्यन्ते विपद्यन्ते च एतत्कायस्थितिमानं। यदुक्तं प्रज्ञापनायां स्वकायस्थित्यष्टादशेपदे-[1]" पुढविकाइए णं पुढविकायत्ताए कालओ केवचिरं होइ पुच्छा? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं असंखिज्जाओ उस्सप्पिणिओसप्पिणीओ कालओ खेत्तओ असंखेज्जा लोगा"। इदमुक्तं भवति-असङ्ख्येयेषु लोकाकाशेषु भवति प्रतिसमयमेकैकप्रदेशापहारेण सर्वप्रदेशापहारे यावत्योऽसङ्ख्येयोत्सर्पिण्यवसर्पिण्यो भवन्ति, एवं आउतेउवाउकाइया वि। चतुर्णां कायानां पृथगभिधानं। तथा अनन्तकायिकास्ता एवोत्सर्पिण्योऽनन्ताः। यदुक्तमन्यत्राप्यागमे-[2]वणस्सइकाइयाणं पुच्छा? गोयमा! जहन्नेणं अंतोमुहुत्तं उक्कोसेणं अणंतं कालं अणंताओ उस्सप्पिणीओसप्पिणीओ कालओ खेत्तओ अणंतालोगा असंखेज्जा पोग्गलपरियट्टा आवलियाए असंखेज्जइभागे"। इयं स्थितिः सांव्यवहारिकानाश्रित्य द्रष्टव्या, असांव्यवहारिकजीवानां त्वनादिरवसेया, ततो न मरुदेव्यादिभिर्व्यभिचारः। तथा च क्षमाक्षमणः-[3]तह काल (य) ट्ठिई कालादओ विसेसे पडुच्च किर जीवे। नाणाइवणस्सइणो, जं संववहारबाहिरिया ॥ १ ॥ इति गाथार्थः ॥ ४० ॥

---

१ पृथ्वीकायिकः पृथ्वीकायिकतया कालतः कियच्चिरं होइ पुच्छा? गौतम! जघन्येन अन्तर्मुहूर्तमुत्कर्षतः असंख्येया उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतः असंख्येया लोकाः।

२ वनस्पतिकायिकानां पृच्छा? गौतम! जघन्येन अन्तर्मुहूर्तमुत्कर्षत अनन्तं कालं अनन्ता उत्सर्पिण्यवसर्पिण्यः कालतः क्षेत्रतः अनन्ता लोका असङ्ख्येयाः पुद्गलपरावर्त्ताः आवलिकाया असङ्ख्येयतमभागः।

३ तथा कायस्थितिकालादयोऽपि विशेषान्प्रतीत्य किल जीवान्
नानादिवनस्पतीन् ये संव्यवहारबाह्याः ॥ १ ॥

*D. C.* All the One-sensed living beings i-e Earth, Water, Light, and Wind, die in their own body and again take birth and die in the same body for innumerable Utsarpiṇīs and Avasarpiṇīs. This is the highest limit of their staying in the same body.

What is meant is this:—The so many asaṅkhyéya utsarpiṇīs and avasarpiṇīs in which (time) the asaṅkhyéya spaces are completely emptied in the manner of removing one at a certain interval, make up the time during which the Ekéndriya beings stay in the same embodiment.

The mention of the remaining four kinds of beings is separate.

In the case of the ananta-Kāyikas the time of duration is so many ananta utsarpinīs.

This limitation should be applied to those beings who are in the usual course of birth and death.

A-sāmvyavahārika Jīvas i-e beings who have not come into the general course of life and death, are existing from times immemorial.

It may be noted that Anantakāyika jīvas are Sādhāraṇa Vanaspatikāyas. (40)

(b) Of Vikaléndriya and Pañcéndriya jīvas.

इत्युक्तमेकेन्द्रियाणां स्वकायस्थितिद्वारं, अथ विकलादीनां स्वकाय-स्थितिद्वारं निरूपयन्नाह—

संखिज्जसमा विगला सत्तट्ठभवा पणिंदितिरिमणुआ ।
उववज्जन्ति सकाए नारय देवा य णो चेव ॥ ४१ ॥

41 Saṅkhijja samā vigalā sattsṭṭha bhavā paṇindi tiri maṇuā ।
Uvavajjanti sa-kāe nārya dévā ya no céva 41

[ सङ्ख्येयसमान् विकला सप्ताष्टभवान पञ्चेन्द्रियतिर्यग्मनुष्याः
उत्पद्यन्ते स्वकाये नारका देवा न चैव ॥ ४१ ॥

41 Sańkhy éyasamān vikālah saptastabhavān pancéndriya tiryag manusyāh.

Utpadyanté svakāyé nārakā dévā na caiva. 41 ]

*Trans* 41. The Vikaléndriyas (beings with deficient sense-organs) take birth in their own body for sańkhyéya years. (and) the Five-sensed lower animals and human beings ( originate in their own body ) for seven or eight existences (While, the Nārakas (hellish beings, and the Dévas ( celestial beings ) do not at all ( originate in the same embodiment.) 41

व्याख्या–४१–सङ्ख्यातसमाः सङ्ख्यातवर्षसहस्राः "विगलाइए वाससहस्ससंखेज्ज त्ति" पञ्चसङ्ग्रहवचनात् विकलाः स्वकाये उत्पद्यन्ते। तथा संज्ञिनः पर्याप्ताः पञ्चेन्द्रियतिर्यङ्मनुष्याः सप्ताष्टौ भवाः। तत्र सप्तभवाः सङ्ख्येयवर्षायुषोऽष्टमस्तत्वसङ्ख्यातवर्षायुरेवातथा हि–पर्याप्त संज्ञिमनुष्याख्यं संज्ञिपञ्चेन्द्रियतिर्यञ्चो वा निरंतरं यथा सङ्ख्य सप्तनरभवांस्तिर्यग्भवांश्चानुभूय यद्यष्टमे भवे भूयस्तेष्वेवोत्पद्यन्ते, ततो नियमाद् असङ्ख्यातायुष्कश्च मृत्वा सुरेष्वैवोत्पद्यते. ततो नवमोऽपि नरभवस्तिर्यग्भवो वा, परं निरन्तरं न लभ्यते। अष्टभवेषूत्कर्षतः कालमानं त्रीणि पल्योपमानि पूर्वकोटीपृथक्त्वाधिकानि, जघन्या तु सर्वत्रापि कायस्थितिरन्तर्मुहूर्त्तमिति। नारकदेवाश्च स्वकाये नोत्पद्यन्ते। इति गाथार्थः ॥ ४१ ॥

D. C. The term ' sańkhyātasamāh ' means a thousand samkhyāta years, For so many years, the Vikaléudriyas i e. one–two–three and four-sensed beings originate in the same embodiment.

The limitation for the Five-sensed beings–The Tiryancas and the Manusyas have seven or eight existences. In this connection, it must be nöted that the seven births relate to the beings whose duration of life is sańkhyāta years while the eighth existence belongs to, those only, whose highest limit of living, is a-sańkhyata years.

To explain:--If the human beings or the lower animals, after finishing seven births without any break, re-originate in the very same embodiment for the eighth time, they have definitely originated in the class of beings whose highest limit of life, is a saṅkhyāta years; and an a-saṅkhyātāyuṣka re-generates in the class of gods. Then even, the ninth birth may be in the same animal or human species, but not constant.

In the case of those who have eight births in the same class the highest limit of living is, three (3) Palyopamas to more than two (2) to nine (9) crores of Pūrvs; the lowest limit falling within a Muhūrta in the case of all.

Lastly, the Nārakas (denizens of hell), as well as, the Dévas (celestial beings) do not re-birth at all in the same body. 41

Now, comes the discussion about Prāṇas (vital airs).

**Prāṇas**

(a) Prāṇas of Ekéndriya and Vikaléndriya Jīvas.

**इत्युक्तं स्वकायस्थितिद्वारं, अथ प्रक्रमात्केषां कति प्राणास्तद्गाथाद्वयेन दर्शयन्नाह—**

**दसहा जियाण पाणा इंदिउसासाउजोगबलरूवा ।**
**एगिंदिएसु चउरो विगलेसु छ सत्त अट्ठेव ॥ ४२ ॥**
**असन्निसन्निपंचिंदि--एसु नव दस कमेण बोद्धव्वा ।**
**तेहिं सह विप्पओगो जीवाणं भण्णए मरणं ॥ ४३ ॥**

42 Desahā jiyāṇa pāṇā indi-usāsa-āyu-joga-bala-rūvā,
Egindiésu cauro Vigalésu cha satta aṭṭhéva 42

43 Asanni-sanni pancindiésu nava dasa kraméṇa bodhdhavvā,
Téhim saha vippaögo jīvāṇam bhaṇṇaé maraṇam 43

**[ दशधा जीवानां प्राणाः इन्द्रियोच्छवासायुर्बलरूपाः ।**
**एकेन्द्रियेषु चत्वारो विकलेषु षट् सप्त अष्टैव ॥ ४२**

असंज्ञिसंज्ञि पञ्चेन्द्रियेषु नव दस क्रमेण बोधव्याः ।
तैः सह विप्रयोगो जीवानां भण्यते मरणम् ॥ ४३ ॥

42 Daśadhā jīvānām prāṇāḥ indriyocchvāsāyu-r-balarūpāḥ ।
Ekéndriyéṣu catvāro Vikaléṣu ṣaṭ sapta aṣṭaiva 42

43 A-sañjni sāñjni pañcéndriyéṣu nava daśa kraméṇa bodhavyāḥ ।
Taiḥ saha viprayogo jīvānām bhaṇyaté maraṇam 43 ]

*Trans.* 42. 43 The prāṇas (vital airs) of the living beings are ten-fold in the form of 5 Indriyas (senses) 6 Breathing 7 Life-limit 8 Mind 9 Speech, and 10 Kāyabala (strength). In the one-sensed beings (they are) four; in Vikaléndriyas (beings with deficient sense-organs) they are six, seven, and eight, indeed. Nine and ten (vital airs) are to be understood respectively for the a-sañjni (unconscious) and the sañjni (conscious) five-sensed beings. Separation from these (vital airs), is said to be the death of the living beings 42-43.

व्याख्या-४२-४३-दशधा दशप्रकारा जीवानां प्राणाः। ते के? पूर्वं पञ्चेन्द्रियाणि-स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि । तथोच्छ्वासशब्देन अविनाभावित्वात् निःश्वासोऽपि गृह्यते । तत उच्छ्वास-निःश्वासरूप एकः प्राणः आयुश्च प्राग्व्यावर्णितस्वरूपं तथा त्रयाणां मनो-वाक्-कायलक्षणानां योगानां बलरूपा इत्येते दशप्राणाः। अस्यां व्याख्यायामयं पाठो ग्राह्यः "इंदि उसासाउजोगबलरूवा त्ति"। अथवा योगाः पूर्वोक्ता एव बलग्रहणेनायुर्बलं, शेषं तथैव । अथ केषां कति प्राणास्तदाह-एकेन्द्रियेषु पृथिव्यादिषु चत्वारः प्राणाः स्पर्शनेन्द्रियोच्छ्वासायुः कायबलरूपाः। द्वीन्द्रियेषु चत्वारस्त एव वाग्बलरसनेन्द्रिययुताः षट् प्राणा भवन्ति । तथा त्रीन्द्रियेषु षट् प्राणास्त एव घ्राणेन्द्रियान्विताः सप्त भवन्ति । तथा चतुरिन्द्रियेषु सप्तैव चक्षुरिन्द्रियसहिताः अष्टौ प्राणा भवन्ति । तथा असंज्ञिपञ्चेन्द्रियेषु अष्टौ त एव श्रोत्रेन्द्रिययुता नव प्राणा भवन्ति । तथा संज्ञिपञ्चेन्द्रियेषु नव त एव मनोयुक्ता दश

माणा भवन्ति। तैः सह विप्रयोगे जीवानां मरणं भण्यते। इति गाथाक्षरार्थः। तथा असंज्ञिसंज्ञिनोर्विशेषो निर्दिश्यते। तद्यथा-संज्ञाऽस्यास्तीति संज्ञी, न संज्ञी असंज्ञी, तत्र असंज्ञिनः पृथिव्यादयः संमूर्छिमपञ्चेन्द्रियान्ताः। इतरे संज्ञिनः पञ्चेन्द्रिया मनः पर्याप्त्यापर्याप्ताः। ननु प्रज्ञापनायामेकेन्द्रियादीनामपि आहार १ भय २ मैथुन ३ परिग्रह ४ क्रोध ५ मान ६ माया ७ लोभ ८ ओघ ९ शोक १० रूपा दश संज्ञा उक्ताः ततस्तेऽपि संज्ञिनः? उच्यते--दशविधाऽपीयमोघसंज्ञारूपत्वात्स्तोका तथा मोहोदयजन्यत्वादशोभनाऽतो नानया संज्ञाऽधिकारः, किंतु महत्या शोभनया च विशिष्टज्ञानावरणीय कर्मक्षयोपशमजन्यया मनोज्ञानसंज्ञया चेति। तथाऽमुमेवार्थं भगवान क्षमाश्रमण आह-[1]"जइ सन्ना संबंधेण, सन्निणो तेण सन्निणो सव्वे। एगिंदियाइयाण त्ति, जं सन्ना नाहिगार घिप्पइ य त्ति"। अथवा संज्ञा त्रिविधा दीर्घकालिक्युपदेशेन १ हेतुवादोपदेशेन २ दृष्टिवादोपदेशेन ३ च। तत्र यः सुदीर्घकालमतीतमर्थं स्मरति, भविष्यच्च वस्तु चिन्तयति कथं नु कर्त्तव्यमिति त्रिकालविषया संज्ञा यस्य स प्रथमसंज्ञी। यदुक्तं-[2]इह दीहकालिगी कालिगि ति सन्ना जया सुदीहंपि। संभरइ भूयमेस्सं, चिंतेइ य कह णु कायव्व?॥ १॥ इति तथा यः संचिन्त्येष्टानिष्टेषु छायातपादिवस्तुषु स्वदेहपालनाहेतोः प्रवृत्तिनिवृत्ती विधत्त सा द्वितीया संज्ञा, तद्वान् द्वितीयसंज्ञी। यदाह-[3]जे पुण संचिंतेउं इट्ठाणिट्ठेसु विसयवत्थूसुं। वट्टंति नियत्तंति य सदेहपरिपालनाहेउं॥ १॥ पायेण संपए च्चिय कालम्मि नयाइ (वि) दीहकालन्ना (न्नू)। हेऊवएससन्नि, णिचिट्ठा हुंति हु अस्सण्णी" ॥ २॥ तृतीयस्तु संज्ञी सम्यग्दृष्टिरेव, शेषास्त्वसंज्ञिनः हिताहितप्राप्तिपरिवर्जन

---

१ यदि संज्ञासंबन्धेन सञ्ज्ञिनस्तेन संज्ञिनः सर्वे। एकेन्द्रियादिका नामपि यत्संज्ञा दशविधा भणिता ॥ १॥ स्तोका न शोभनाऽपि च। या संज्ञा (तया) नाधिकारः गृह्यते च।

२ इह दीर्घकालिकी कालिकीतिसंज्ञा यथा सुदीर्घमपि।
संस्मरति भूतमेष्यतं चिन्तयति च कथं नु कर्त्तव्यम्॥ १॥

३ ये पुनः संचिन्त्येष्टानिष्टेषु विषयवस्तुषु।
प्रवर्त्तन्ते निवर्त्तन्ते च स्वदेहपरिपालन हेतोः॥ १॥

प्रायेण सांम्प्रत एव काले न चापि दीर्घकालज्ञः।
हेतुवादोपदेश संज्ञिनः निश्चेष्टा भवन्ति असंज्ञिनः॥

संज्ञिलक्षणसंज्ञिसाध्यप्रयोजनाकरणात् । उक्तं च-[1]"सम्मदिट्ठी सण्णी संते णाणे खओवसमयम्मि । असन्नी मिच्छत्ती दिट्ठिवाओवएसेणं" ॥ १ ॥ अथैतासां मध्ये कस्य जन्तोः का संज्ञा भवतीति व्यक्ताभ्यां क्षमाश्रमणगाथाभ्यामेव प्रदर्शयति, तथाहि-[2]"पंचण्ह मू (मो) ह सन्ना, हेऊ सन्ना बिइंदियाईणं । सुरनारयगब्भुब्भवजीवाणां कालिगी-सन्ना ॥ १ ॥ सन्ना सम्मद्दिट्ठीण, होइ इह दिट्ठिवाउ सुयनाणं । मइवावारविमुक्काण, सन्नाईया (या) उ केवलिणो ॥ २ ॥" इत्यसंज्ञिसंज्ञिविशेषमभिधाय पुनः सूत्तोक्तमेवान्यक्रमेण प्राणास्वरूपं व्यनक्ति, यत उक्तम्-पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यदायुः । प्राणा दशैते भगवद्भिरुक्ता एषां वियोगीकरणं तु हिंसा ॥ १ ॥ इति गाथाद्वयार्थः ॥ ४२-४३ ॥

D. C. The term Ucchvāsa means breathing out and Niḥśvāsa means breathing in. The Prāṇas (vital airs) of the living beings are of ten kinds, viz. 1 Sense of Touch 2. Sense of Taste 3. Sense of Smell 4. Sense of Sight 5. Sense of Hearing 6. Breathing 7. Āyu ( Limit of Life ), 8 Strength of Mind 9 Strength of Speech, and 10. Strength of Body.

The commentator explains the term "Yoga" in two ways. (1) The three types of strength viz of mind, speech and of body. Or (2) The word 'yoga,' may be disconnected with the word 'bala' which latter may be connected with āya or life. In this case also, the yogas are of mind, apeech and body. The first alternative seems to be preferable.

१ सम्यग्दृष्टयः संज्ञिनः सति ज्ञाने क्षायोपशमिके ।
असंज्ञिनः मिथ्यात्विनः दृष्टिवादोपदेशेन ॥ १ ॥

२ पञ्चानां ओघसंज्ञा हेतुसंज्ञा द्वीन्द्रियादीनाम् ।
सुरनारकगर्भोद्भवजीवानां कालिकी सज्ञा ॥ १ ॥

संज्ञा सम्यग्दृष्टीनां भवतीह दृष्टिवादः श्रुतज्ञानम् ।
मतिव्यापारविमुक्ताः सञ्ज्ञातीताः केवलिनः ॥ २ ॥

